॥ श्रीकृष्णोपनिषत् ॥

॥ श्री गुरुभ्यो नमः हरिः ॐ ॥

यो रामः कृष्णतामेत्य सार्वात्म्यं प्राप्य लीलया ।
अतोषयद्देवमौनिपटलं तं नतोऽस्म्यहम् ॥ १॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।

ॐ शान्तिः शान्तिः शान्तिः ।

॥ अथ प्रथम खंडः ॥

हरिः ॐ । श्रीमहाविष्णुं सच्चिदानन्दलक्षणं रामचन्द्रं
दृष्ट्वा सर्वाङ्गसुन्दरं मुनयो वनवासिनो विस्मिता बभूवुः ।
तं होचुर्नोऽवद्यमवतारान्वै गण्यन्ते आलिङ्गामो भवन्तमिति ।
भवान्तरे कृष्णावतारे यूयं गोपिका भूत्व मामालिङ्गथ
अन्ये येऽवतारास्ते हि गोपा न स्त्रीश्च नो कुरु । अन्योन्यविग्रहं
धार्यं तवाङ्गस्पर्शनादिह । शाश्वतस्पर्शयितास्माकं
गृण्हीमोऽवतारान्वयम् ॥ १॥

रुद्रादीनां वचः शृत्वा प्रोवाच भगवान्स्वयम् ।
अङ्गयङ्गं करिष्यामि भवद्वाक्यं करोम्यहम् ॥ २॥

मोदितास्ते सुरा सर्वे कृतकृत्याधुना वयम् ।
यो नन्दः परमानन्दो यशोदो मुक्तिगेहिनी ॥ ३॥

माया सा त्रिविधा प्रोक्ता सत्त्वराजसतामसी ।
प्रोक्ता च सात्त्विकी रुद्रे भक्ते ब्रह्मणि राजसी ॥ ४॥

तामसी दैत्यपक्षेषु माया त्रेधा ह्युदाहृता ।
अजेया वैष्णवी माया जप्येन च सुता पुरा ॥ ५॥

देवकी ब्रह्मपुत्र सा या वेदैरुपगीयते ।
निगमो वसुदेवो यो वेदार्थः कृष्णरामयोः ॥ ६॥

स्तुवते सततं यस्तु सोऽवतीर्णो महीतले ।
वने वृन्दावने क्रीडङ्गोपगोपीसुरैः सह ॥ ७॥

गोप्यो गाव ऋचस्तस्य यष्टिका कमलासनः ।
वंशस्तु भगवान् रुद्रः शृङ्गमिन्द्रः सगोसुरः ॥ ८॥

गोकुलं वनवैकुण्ठं तापसास्तत्र ते द्रुमाः ।
लोभक्रोधादयो दैत्याः कलिकालस्तिरस्कृतः ॥ ९॥

गोपरूपो हरिः साक्षान्मायाविग्रहधारणः ।
दुर्बोधं कुहकं तस्य मायया मोहितं जगत् ॥ १०॥

दुर्जया सा सुरैः सर्वैर्धृष्टिरूपो भवेद्विजः ।
रुद्रो येन कृतो वंशस्तस्य माया जगत्कथम् ॥ ११॥

बलं ज्ञानं सुराणां वै तेषां ज्ञानं हृतं क्षणात् ।
शेशनागो भवेद्रामः कृष्णो ब्रह्मैव शाश्वतम् ॥ १२॥

अष्टावष्टसहस्रे द्वे शताधिक्यः स्त्रियस्तथा ।
ऋचोपनिषदस्ता वै ब्रह्मरूपा ऋचः स्त्रियाः ॥ १३॥

द्वेषाश्चाणूरमल्लोऽयं मत्सरो मुष्टिको जयः ।
दर्पः कुवलयापीडो गर्वो रक्षः खगो बकः ॥ १४॥

दया सा रोहिणी माता सत्यभामा धरेति वै ।
अघासुरो माहाव्याधिः कलिः कंसः स भूपतिः ॥ १५॥

शमो मित्रः सुदामा च सत्याक्रोद्धवो दमः ।
यः शङ्खः स स्वयं विष्णुर्लक्ष्मीरुपो व्यवस्थितः ॥ १६॥

दुग्धसिन्धौ समुत्पन्नो मेघघोषस्तु संस्मृतः ।
दुग्दोदधिः कृतस्तेन भग्नभाण्डो दधिगृहे ॥ १७॥

क्रीडते बालको भूत्वा पूर्ववत्सुमहोदधौ ।
संहारार्थं च शत्रूणां रक्षणाय च संस्थितः ॥ १८॥

कृपार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ।

यत्स्रष्टुमीश्वरेणासीतच्चक्रं ब्रह्मरूपदृक्   ॥ १९॥

जयन्तीसंभवो वायुश्चमरो धर्मसंज्ञितः ।
यस्यासौ ज्वलनाभासः खड्गरूपो महेश्वरः   ॥ २०॥

कश्यपोलूखलः ख्यातो रज्जुर्माताऽदितिस्तथा ।
चक्रं शङ्खं च संसिद्धिं बिन्दुं च सर्वमूर्धनि   ॥ २१॥

यावन्ति देवरूपाणि वदन्ति विभुधा जनाः ।
नमन्ति देवरूपेभ्य एवमादि न संशयः   ॥ २२॥

गदा च काळिका साक्षात्सर्वशत्रुनिबर्हिणी ।
धनुः शार्ङ्गं स्वमायाच शरत्कालः सुभोजनः   ॥ २३॥

अब्जकाण्डं जगत्बीजं धृतं पाणौ स्वलीलया ।
गरुडो वटभाण्डीरः सुदामा नारदो मुनिः   ॥ २४॥

वृन्दा भक्तिः क्रिया बुद्धीः सर्वजन्तुप्रकाशिनी ।
तस्मान्न भिन्नं नाभिन्नमाभिर्भिन्नो न वै विभुः ।
भूमावुत्तारितं सर्वं वैकुण्ठं स्वर्गवासिनाम्   ॥ २५॥

॥ इति प्रथम खण्डः ॥

॥ अथ द्वितीयः खण्डः ॥

शेषो ह वै वासुदेवात् संकर्षणो नाम जीव आसीत् ।

सोऽकामयत प्रजाः सृजेयेति ।

ततः प्रद्युम्नसंज्ञक आसीत् ।

तस्मात् अहंकारनामानिरुद्धो हिरण्यगर्भोऽजायत ।

तस्मात् दश प्रजापतयो मरीच्याद्याः
स्थाणुदक्षकर्दमप्रियव्रतोत्तनपादवायवो व्यजायन्त ।

तेभ्योः सर्वाणि भूतानि च ।

तस्माच्छेषादेव सर्वाणि च भूतानि समुत्पद्यन्ते ।

तस्मिन्नेव प्रलीयन्ते ।

स एव बहुधा जायमानः सर्वान् परिपाति ।

स एव काद्रवेयो व्याकरणज्योतिषादिशास्त्राणि निर्मिमाणो
बहुभिर्मुमुक्षुभिरुपास्यमानोऽखिलां भुवमेकस्मिन्
शीर्ष्णे सिद्धार्थवदवध्रियमाणः सर्वैर्मुनिभिः
सम्प्रार्थ्यमानः सहस्रशिखराणि मेरोः
शिरोभिरावार्यमाणो महावाय्वहंकारं निराचकार ।

स एव भगवान् भगवन्तं बहुधा विप्रीयमाणः अखिलेन स्वेन
रुपेण युगे युगे तेनैव जयमानः स एव सौमित्रिरैक्ष्वाकः
सर्वाणि धानुषशास्त्राणि सर्वाण्यस्त्रशास्त्राणि बहुधा
विप्रीयमानो रक्षांसि सर्वाणि विनिघ्नंश्चातुर्वर्ण्यधर्मान्
प्रवर्तयामास ।

स एव भगवान् युगसंधिकाले शारदाभ्रसंनिकाशो
रौहिनेयो वासुदेवः सर्वाणि गदाद्यायुधशास्त्राणि
व्याचक्षाणो नैकान् राजन्यमण्डलान्निराचिकीर्षुः
भुभारमखिलं निचखान ।

स एव भगवान् युगे तुरियेऽपि ब्रह्मकुले जायमानः सर्व
उपनिषदः उद्दिधीर्षुः सर्वाणि धर्मशास्त्राणि
विस्तारयिष्णुः सर्वानपि जनान् संतारयिष्णुः
सर्वानपि वैष्णवान् धर्मान् विजृम्भयन्
सर्वानपि पाषण्डान् निचखान ।

स एष जगदन्तर्यामी ।

स एष सर्वात्मकः ।

स एव मुमुक्षुभिर्ध्येयः ।

स एव मोक्षप्रदः ।

एतं स्मृत्वा सर्वेभ्यः पापेभ्यो मुच्यते ।

तन्नाम संकीर्तयन् विष्णुसायुज्यं गच्छति ।

तदेतद् दिवा अधीयानः रात्रिकृतं पापं नाशयति ।

नक्तमधीयानो दिवसकृतं पापं नाशयति ।

तदेतद्वेदानां रहस्यं तदेतदुपनिषदां रहस्यम्
एतदधीयानः सर्वत्रतुफलं लभते
शान्तिमेति मनःशुद्धिमेति सर्वतीर्थफलं लभते
य एवं वेद देहबन्धाद्विमुच्यते इत्युपनिषत् ॥

॥ इति द्वितीयः खण्डः ॥

हरिः ॐ तत्सत्

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।

ॐ शान्तिः शान्तिः शान्तिः ।

॥ इति कृष्णोपनिषत्समाप्ता ॥

॥ भारतीरमणमुख्यप्राणंतर्गत श्रीकृष्णार्पणमस्तु ॥